अतिस्नेहाकुल. सोपि हृदयस्फोटतो मृतः ।
दु:सहं हि प्रियादुखं किं पुन सुतसयुतम् ॥११६॥
दानानुमोदनापुण्यप्रभावात् प्रवराशयः ।
चित्रसेनकुमारोयं सञ्जातो राजनन्दनः ॥१२०॥
मोहितो मोहनीयेनाभीष्टरूपविलोकनात् ।
रत्नसार ! सखा तेसौ मूर्च्छितस्तेन हेतुना ॥१२१॥
आमूलचूलवृत्तान्तं श्रुत्वा पूर्वभवोद्भवम ।
जाता जातिस्मृतिस्तस्योपदेशात् प्रवरान्मुनेः ॥१२२॥
करामलकवत्सर्वं पश्यन् पूर्वभवं निजम् ।
प्रमोदाच्चित्रसेनस्तं ववन्दे मुनिपुङ्गवम् ॥१२३॥
यतीश ! यत्त्वयावाचि सत्य ज्ञातं मयाखिलम् ।
परं केन प्रकारेण मिलिष्यति मम प्रिया ॥१२४॥
केवल्यूचेधुना सा तु नरद्वेषेण वर्तते ।
स्त्रीणां स्तुतिपरा नित्यं पुंसां निन्दापरायणा ॥१२५॥
कुमारोकथयन्नाथ ! निन्दायाः कारण किमु ।
मुनिराह भवे पूर्वे जलार्थं प्रेषितो भवान् ॥१२६॥
दावाग्नितापिता हंसी मनस्येवं व्यचिन्तयत् ।
नि.स्नेहो बालकांस्त्यक्त्वा जलव्याजात् पलायित.॥१२७॥
तेन वैरेण सा कन्या नरद्वेषपरायणा ।

सन्तापमतुलं मातृपित्रोश्च कुरुतन्वहम् ॥१२८॥
यदा प्रागभवमालिख्य पटे त्व दर्शयिष्यसि ।
लब्ध्वा जातिस्मृतिं त्वां तु परिणेष्यति सा तदा ॥१२९॥
एवंविधञ्च वृत्तान्त श्रुत्वा कर्णामृतोपमम् ।
हृष्टचित्तो मुनि नत्वा यथागतमगादसौ ॥१३०॥
कुमारो मन्त्रिपुत्रं तं बभाषे मित्रवत्सल ।
कथं पद्मावती कन्या परिणेया मयाधुना ॥१३१॥
रत्नसारस्ततोवोचत् कुमार ! शृणु मद्वच. ।
गत्वा रत्नपुरद्रङ्गे कुरु कार्यं यथोचितम् ॥१३२॥
चेतसीति विनिश्चित्य प्रस्थितौ तत्पुर प्रति ।
अनेकाश्चर्यसम्पूर्णां पश्यन्तौ पथि भूमिकाम् ॥१३३॥
कियद्भिर्वासरैस्तौ च प्राप्तौ रत्नपुरान्तिके ।
पश्यन्तौ नगरोद्यानं तरुराजिविराजितम् ॥१३४॥
वापीकूपतडागानि प्रपादेवकुलानि च ।
क्रमादालोकयन्तौ तौ प्राप्तौ गोपुरसन्निधौ ॥१३५॥
धनञ्जयस्य तत्रास्ति यक्षस्यायतन वरम् ।
रात्रौ तत्कोणके सुप्तौ मन्त्रिसूराजनन्दनौ ॥१३६॥
रात्रेः कृष्णचतुर्दश्या व्यतीते प्रहरद्वये ।
मिलिता भूतवेतालराक्षसाः किन्नरादयः ॥१३७॥

मासे मासे च यात्रार्थमागता यक्षमन्दिरे ।
हृष्टाः कुर्वन्ति ते वाद्यं गीतं नृत्यञ्च सुन्दरम् ॥१३८॥
कुमारश्चित्रसेनोपि वाद्यनादेन बोधितः ।
अपश्यत् पर्षदां तत्र सुपर्वाधीश्वरोपमाम् ॥१३९॥
केपि वीणामुपादाय वाद्यन्ति मधुरस्वरम्[1] ।
केपि गीतानि गायन्ति गम्भीरालापपूर्वकम् ॥१४०॥
मृदङ्गतालकंसालविशालध्वनिपेशलम् ।
धनञ्जयाख्ययक्षाग्रे नृत्यं कुर्वन्ति केपि च ॥१४१॥
कौतुकाकुलचित्तोपि कुमारः साहसाग्रणीः ।
करवालं करे कृत्वा तत्सभायां मुदागमत् ॥१४२॥
सर्वे यक्षादयो देवास्तं समालोक्य विस्मिताः ।
सुन्दरः कुमरः कोयं पृच्छन्तीति परस्परम् ॥१४३॥
धनञ्जयस्तदा दध्यौ प्राघूर्णो मम मन्दिरे ।
आगतः पूजनीयोयमेतदाचरणं सताम् ॥१४४॥
इति चेतसि सञ्चिन्त्य तुष्टोवोचद्धनञ्जयः ।
तुभ्यं यद्रोचते वत्स मार्गय त्वमशङ्कितः ॥१४५॥
इतियक्षवचः श्रुत्वा कुमारो विदुषाम्वरः ।
विनयाभिनमन्मौलिरेतद्वचनमब्रवीत् ॥१४६॥

---

1 The editor suggests वादयन्ति मधुस्वरम् ।

अद्य मे सफलं जन्म सफलं मेद्य जीवितम् ।
अद्य मे सफला यात्रा यज्जातं तव दर्शनम् ॥१४७॥
विनयावर्जितो यक्षो हृष्टोवोचदिदं वचः ।
कुमार मत्प्रसादेन संग्रामे विजयोस्तु ते ॥१४८॥
राजराजं मुदा नत्वा वरं लब्ध्वा वराशयः ।
चित्रसेनकुमारोथ समागान्मित्रसन्निधौ ॥१४६॥
वीरसेनसुतः सारत्नसारसुहृत्पुर. ।
वरलब्ध्यादिकं सर्वं वृत्तान्तञ्च भ्यवेदयत् ॥१५०॥
पूर्णा यक्षपतेर्यात्रा विभाता च विभावरी ।
कुमारो मन्त्रिपुत्रश्च प्रापतुस्तौ चतुष्पथे ॥१५१॥
तस्मिन्नवसरे तत्र नृपः पद्मरथाभिध. ।
पुत्रीविवाहमुद्दिश्य घोषणामित्यकारयत् ॥१५२॥
यः कोपि पुरुषद्वेषं सुतायाः स्फेटयेन्नर ।
अर्धराज्यं सुतां तस्मै निःसन्देहं ददाम्यहम् ॥१५३॥
आकर्ण्य घोषणामेवं हर्षपूरितमानस. ।
रत्नसारमुखं दृष्ट्वा कुमार इदमब्रवीत् ॥१५४॥
वाञ्छितार्था हि सिध्यन्ति प्रायः पुण्योदये नृणाम् ।
मित्र साहाय्यमेतत्ते तत्सुवर्णस्य सौरभम् ॥१५५॥
एवमुक्त्वा कुमारेण स्मृत्वा तद्ज्ञानिनो वचः ।

गत्वा चित्रकरोपान्ते पटश्चित्रापितः पटुः ॥१५६॥
आदाय तं पटं पाणौ गुप्तवेषो भ्रमन् पुरे ।
चारुचातुर्यगीताद्यैररञ्ज नगरीजनान् ॥१५७॥
श्रुत्वा तद्भाग्यसौभाग्यचातुर्यादिकलां जनात् ।
दर्शनोत्कण्ठिता तस्य जाता पद्मावती कनी ॥१५८॥
पूर्वप्रेमानुबन्धेन समाकार्य निजान्तिके ।
दर्शनाच्चित्रसेनस्य सञ्जाता सानुरागिणी ॥१५९॥

यतः—

लोचनान्येव जानन्ति सम्बन्धं पूर्वजन्मनः ।
यतो हर्षं प्रिये दृष्टे वहन्ते चाप्रिये रुषम् ॥१६०॥
साश्चर्यमानसाः सख्यो विलोकन्ते परस्परम् ।
अनेन पुरुषेणास्या नरद्वेषो निराकृतः ॥१६१॥
तत्करस्थपटेपश्यत् कन्या काननमुत्तमम् ।
नालिकेरकदल्यादितरुमण्डलमण्डितम् ॥१६२॥
अनेकपङ्कजाकीर्णं कमनीयं सरस्तथा ।
वटवृक्षश्च सापत्यहंसहंसीमनोहरम् ॥१६३॥
तत्र दावानले लग्ने हंसोगान्नीरहेतवे ।
बालरक्षाकृते हंसी स्थिता दावानलाकुला ॥१६४॥
शीघ्रं पानीयमादाय यावदायाति पादपे ।

तावद्बालकसंयुक्ता दग्धा हंसी दवाग्निना[1] ॥१६५॥
दृष्ट्वा दवाग्निना[1] दग्धां प्रियां बालोपरिस्थिताम् ।
दुःखपूराकुलो हंसो हृदयस्फोटतो मृतः ॥१६६॥
एवं चित्रपटं दृष्ट्वा जातजातिस्मृतिस्मृतिः ।
मूर्च्छयाकुलचित्ता सा पतिता पृथिवीतले ॥१६७॥
शीतोपचारतः सुस्थीभूता चिन्तयतीति सा ।
मद्वियोगातुरस्वान्तो हा हा हंसो मृत. किमु ॥१६८॥
पुरुषेषु मुधा द्वेषः प्रचक्रे मूढया मया ।
एष चित्रधरो धीरो जीवो हंसस्य नान्यथा ॥१६९॥
सखीभिः सार्द्धमित्येतां वार्त्तां यावत्करोत्यसौ ।
कुत्रापि कुमरस्तावद् गतो मित्रसमन्वितः ॥१७०॥
क्षणान्तरे कुमारी तं यावत् पश्यति नाग्रत. ।
नरश्चित्रधरं तावत्तद्वियोगाद् रुरोद सा ॥१७१॥
क्व गतश्चित्तचौरोसौ ममोषित्वा च मानसे ।
धूर्त्तेन धूर्त्तिता बाढ हा सखि त्वं तमानय ॥१७२॥
[2]वसिऊण मुज्झ हियए जीवं गहिऊण कत्थ चलिओ सि ।
सहवासघरविडंबग गंगंमि गओ न सुज्झहसि ॥१७३॥
एवञ्च विलपन्ती सा भर्तुर्दुःखेन दुःखिता ।

1 Z दावा० । 2 A adds यतः before verse 173.

सखीभिर्मधुरैर्वाक्यैः प्रबोध्य स्थापिता भृशम् ॥१७४॥
राजा विज्ञातवृत्तान्तः स्वयम्वरणमण्डपम् ।
प्रारेभे सर्वसामग्रीशोभितं शुभवासरे ॥१७५॥
भूपानां भूपपुत्राणामाकारणकृते ततः ।
प्रेषिताः सेवकाः शीघ्र भूमीशेन दिशोदिशम् ॥१७६॥
इति ज्ञात्वा सदाकाराः सशृङ्गारा नरेश्वराः ।
स्वयम्वरमहोद्धर्षा[1]लोकनाकुलमानसाः ॥१७७॥
चतुरङ्गचमूयुक्ताः प्राप्ता रत्नपुरान्तिके ।
पश्यन्तः कौतुकं सम्यक् स्थिता उद्यानभूमिषु ॥१७८॥
आगतानां नरेशानां चित्तवित्तानुसारतः ।
नृपः पद्मरथाह्वानो रचयामास गौरवम् ॥१७९॥
चित्रिता विविधैर्वर्णैः पाञ्चालीभिर्मनोरमाः ।
निर्मलस्फटिकस्तम्भा मण्डिता यत्र मण्डपे ॥१८०॥
स्वर्णचित्राङ्कितस्फारपट्टैराच्छादितोभितः ।
चारुचन्द्रोदयः सूत्रधारैर्व्यरचि मण्डपः ॥१८१॥
नानाविधमणिश्रेणिनिबद्धवसुधातलः ।
प्रभूतस्वप्रभापुञ्जनिर्नाशिततमोभरः ॥१८२॥
निर्मितानेकविज्ञानरम्यवातायनाद्भुतः ।

1 Z adds the gloss महोच्छव in the margin

हेमदण्डमनोहारिध्वजराजिविराजित[1]. ॥१८३॥
समश्रेणिस्थितानेकमञ्चकावलिकान्वितः ।
प्राकारकपिशीर्षालीप्रतोलीप्रतिभासितः ॥१८४॥
कालागुरुतुरुष्कादिप्रोल्लसद्धूपधूपितः ।
पञ्चवर्णस्फुरद्भूरिप्रसूनप्रकराञ्चितः ॥१८५॥
विलोक्यैवम्विधं लोकाः स्तवयन्तीति मण्डपम् ।
देवाधीशविमानं किं मेदिनीतलमागतम् ॥१८६॥
क्वचिद्गीतैः क्वचिन्नृत्यैः सङ्गीतविधिभि. क्वचित् ।
क्वचिद्वादित्रनिर्घोषैः शोभिते भूपमण्डपे ॥१८७॥
शुभेह्नि शुभवेलायां मञ्चकेषु यथोचितम् ।
उपविष्टा नृपाः सर्वे भूरिभूषणभूषिताः ॥१८८॥
अथ पद्मरथो राजा जगाद जगतीपतीन् ।
वज्रसाराभिधं चापमस्त्यस्माकं क्रमागतम् ॥१८९॥
मण्डपस्थमिदं चापमारोपयति यो नृपः ।
परिणेष्यति मत्पुत्रीं स रूपादिगुणान्विताम् ॥१९०॥
एवमाकर्ण्य भूपालाः स्वभुजाबलगर्विताः ।
धनुर्वेदविदो जाताश्चापारोपणतत्पराः ॥१९१॥
अथ पद्मावती कन्या धन्यंमन्या वराम्बरा ।

1 A ०राजवि० ।

उदारस्फारशृङ्गारा सखीजनसमन्विता ॥१९२॥
सद्यस्कग्रथितानेकप्रसूनानां कराम्बुजे ।
वरमालां दधाना च सावधाना वरेक्षणे ॥१९३॥
स्वर्णकम्बवालसत्पाणिवेत्रधारिपुरस्सरा ।
मातङ्गगमनायाता स्वयम्वरणमण्डपे ॥१९४॥
यथा दीपशिखा ध्वान्ते प्रकाशयति मन्दिरम् ।
तथा पद्मावती कन्या प्रकाशं मण्डपेकरोत् ॥१९५॥
बलिष्ठसुभटारोप्य मण्डपस्थमिदं धनु. ।
सुकुमारः कुमारोसौ कथमारोपयिष्यति ॥१९६॥
इतिचिन्ताकुला कन्या यावच्चित्ते विचारयेत् ।
तावद् द्वादशनन्दीनां निर्घोषः समुपस्थितः ॥१९७॥
भूपानां मञ्चकस्थानां सावधानहृदां पुरः ।
नरो वेत्रधरस्तावदेवमुच्चैरभाषत ॥१९८॥
सर्वे मानवनेतारो दातारोपारविक्रमाः ।
कन्यावरणवाञ्छा चेद्धनुरारोपयन्तु भोः ॥१९९॥
लाटाधिपस्तदोत्तस्थौ कुमारीवरणोत्सुकः ।
ऊर्द्ध्वीकृत्य भुजादण्डं सुसंवृत्योत्तरीयकम् ॥२००॥
समुत्थाय बलं कृत्वा यावद्याति धनुर्दिशम् ।
तावच्चापं च नापश्यज्जन्मान्ध इव भूपतिः ॥२०१॥

जहास परिषत्सर्वा दत्ततालां परस्परम् ।
लज्जाधोवदनो राजा सिंहासनमुपाययौ ॥२०२॥
कर्णाटेशः समुत्थाय कृत्वा भुजपराक्रमम् ।
यावद् गृह्णाति कोदण्डं कन्यावरणलम्पटः ॥२०३॥
तावत्कृतफणाटोपान् दृष्ट्वा सर्पान् भयार्दितः ।
स व्यलोकि सभालोकैः सतालं[1] हसितश्च तैः ॥२०४॥
काश्मीराधिपतिर्वीरा[2]भिमान्यतुलविक्रमः ।
यावद् व्रजेद्धनुःपार्श्वे कन्यारूपचमत्कृतः ॥२०५॥
पीडितः पीडया तावत् पतितः पृथिवीतले ।
हसितः पर्षदालोकैर्लज्जितः स्वासने गतः ॥२०६॥
एवमङ्गाधिपो भूपो यावद् गच्छति चाग्रतः ।
देवताधिष्ठितं तावद् दृष्ट्वा ज्वालाकुलं धनुः ॥२०७॥
भीतः सकललोकानां हास्यकोलाहलाकुलः[3] ।
अपानतमुखाम्भोजो निविष्टश्च निजासने ॥२०८॥
ततः पद्मरथो राजा चिन्तयामास चेतसि ।
अप्राप्तवाञ्छिता पुत्री कं वरं परिणेष्यति ॥२०९॥
कन्याप्यचिन्तयच्चित्ते नागतः प्राणवल्लभः ।
नूनं स्वयम्वराचारो जातो व्यर्थो ह्यभाग्यतः ॥२१०॥

1 Z सतालः । 2 A ०राभि०, Z ०राः भि० । 3 Z ०कुलं ।

गुप्तवेषधरस्तावद् दृष्टो मित्रयुतः पतिः ।
ततः कन्या सरोमाञ्चा जाता मुदितमानसा ॥२११॥
कुमारश्चित्रसेनोऽपि पश्यन् घनकुतूहलम् ।
खेदखिन्नान् नृपान् सर्वान् वीक्ष्य मित्रान्तिकं गतः ॥२१२॥
गत्वेति कथयामास कुमारः स्फारविक्रमः ।
यदि मित्र तवेच्छा स्याद्धनुरारोपयामि तत् ॥२१३॥
चित्तोत्साहवशेनाहमेवं मन्ये विदाम्वर ।
भविष्यति ममाभीष्टकार्यसिद्धिश्च साम्प्रतम् ॥२१४॥

यतः—

लघूत्थानान्यविघ्नानि सम्भवत्साधनानि च ।
कथयन्ति पुरः सिद्धिं कारणान्येव कर्मणाम् ॥२१५॥

तथा—

दृष्टिपूतं न्यसेत् पादं[1] वस्त्रपूतं जलं पिबेत् ।
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥२१६॥
मनस्येवं विमृश्याथ गत्वा कोदण्डसन्निधौ ।
नमस्कृत्य करे कृत्वा स्मृत्वा चित्ते धनञ्जयम् ॥२१७॥
खड्गपाणिधरे मित्रे निर्भयं पृष्ठतः[2] स्थिते ।
चित्रसेनकुमारेण लीलयारोपितं धनुः ॥२१८॥

1 Z पाद् ।  2 A Z पृष्ठित ।

आरोपितं धनुर्दृष्ट्वा कुमार्या कुमरस्य च ।
वरमाला गले क्षिप्ता परमानन्दतस्ततः ॥२१९॥
अज्ञातस्य गले पुंसो दृष्ट्वा माला प्रलम्बिताम् ।
रुष्टाः सर्वेपि भूपालाः सायुधाः समुपस्थिताः ॥२२०॥
अजानन्त्या कुमार्यामौ वृतस्तत्किं सहामहे ।
नीचात्मानं निहत्यैनं ग्रहीष्यामो वय कनीम् ॥२२१॥
उच्चैरेवं ब्रुवाणास्ते श्मश्रून्यस्तलसत्कराः ।
कठोरकवचव्रातपरित्रातवपुर्लताः ॥२२२॥
तुरङ्गमगताः केचित् केचिद्दन्तावलस्थिताः ।
शताङ्गसंस्थिताः केचित सङ्ग्रामाय ढुढौकिरे ॥२२३॥
धनञ्जयाभिधं यक्षं चिन्तयित्वा स्वचेतसि ।
सारोपमः कुमारोपि रणायाभिमुखः स्थितः ॥२२४॥
सङ्ग्रामे दारुणे जाते कुमारेण समन्ततः ।
एकेनापि जिताः सर्वे मृगेशेन मृगा यथा ॥२२५॥
राजा पद्मरथो यावन्निवारयति भूपतीन् ।
अकस्मादाह भट्टश्च कुमारविरुदावली ॥२२६॥
श्रीवसन्तपुराधीशवीरसेननृपाङ्गजः ।
कुमारश्चित्रसेनोसौ चिरञ्जयतु भूतले ॥२२७॥
इति कर्णामृतं वाक्यं श्रुत्वा पद्मरथोब्रवीत् ।

स्थीयतां स्थीयतां भूपाः श्रूयतां भट्टवाचिकम् ॥२२८॥
श्रुत्वा तस्य कुलाख्यातिं विस्मिता भूभुजोवदन्।
एतच्छौर्यञ्च गाम्भीर्यं नहि क्षत्रकुलं विना ॥२२९॥
अथ सर्वेपि राजानः प्रीतास्तं श्रितवत्सलम् ।
सम्यक् क्षामयितु लग्ना विहिताञ्जलयो नताः ॥२३०॥
ततः पद्मरथो राजा हर्षपूरितमानसः ।
विवाहं कारयामास महता विस्तरेण च ॥२३१॥
करमोचनके दत्तं मणिस्वर्णाम्बरान्वितम् ।
देशाकरपुरग्रामगजवाजिरथादिकम् ॥२३२॥
अथ रत्नपुराधीशो भूपतीन् याचकानपि ।
प्रकामं तोषयामास यदृच्छादानमानतः ॥२३३॥
पाणिग्रहमहे[1] पूर्णे मुदितौ तौ परस्परम् ।
पूर्वजन्मानुरागेण तिष्ठतः ससुखं गृहे ॥२३४॥
तिष्ठत· श्वशुरावासे गते काले कियत्यपि ।
अन्यदा यामिनीशेषे स्मृतं राज्यं निजं हृदि ॥२३५॥
ततो मित्रं समाहूय कथयामास हृद्गतम् ।
श्वशुरस्य गृहं प्रायः पुंसां लज्जाकरं यतः ॥२३६॥
उत्तमाः स्वगुणै· ख्याता मध्यमाश्च पितुर्गुणैः ।

1 Z ०मह्रे ।

अधमा मातुलैः ख्याताः श्वशुरैश्चाधमाधमाः ॥२३७॥
रत्नसारस्ततो गत्वा राज्ञो विज्ञप्तिकां व्यधात् ।
यदाज्ञापयति स्वामी गम्यते स्वगृहं प्रति ॥२३८॥
निर्मिते दर्शने देव मातृपित्रोर्वियोगिनो. ।
वासरा बहवो जाताः प्रसद्याज्ञां प्रयच्छ तत् ॥२३९॥
अथ पद्मरथो राजा श्रुत्वा मन्त्र्युदितं वचः ।
स्वजामातृप्रयाणाय सामग्रीं कृतवांस्ततः ॥२४०
प्रयाणसमये पुत्री समारोप्य सुखासने ।
मातृपित्रादिको लोको दत्ते शिक्षामिमां वराम् ॥२४१॥
श्वश्रूश्वशुरशुश्रूषा[1] करणीया निरन्तरम् ।
भर्ता देव इवाराध्यः स्त्रीणां भर्ता हि देवता ॥२४२॥
दत्त्वा शिक्षामिमां पुत्री मिलित्वा स्वजनैः समम् ।
कुमारश्चालितो राज्ञा सुतासैन्यसमन्वितः ॥२४३॥
अनेकनगरग्रामान् समुल्लङ्घ्य कियद्दिनैः ।
पश्यन् कुतूहलं मार्गे वने ग्रामे मनोरमे ॥२४४॥
न्यग्रोधपादपस्तत्र काननेऽस्ति मनोरमः ।
महाशाखाप्रशाखासत्पत्रराजिविराजितः ॥२४५॥
अथ तस्य तरोः शीतच्छायायां सैनिकाः स्थिताः ।

1 Z °शुश्रूषा° ।

मार्गश्रमपरिश्रान्ताः सस्नाताः सुखिनः समे ॥२४६॥
उपविष्टावधोभागे प्रशंसेते च दम्पती ।
विस्तारशीतलच्छायादिकं पादपसम्भवम् ॥२४७॥
सन्ध्यायामथ जातायां सुप्ताः सर्वेऽपि सैनिकाः ।
कुमारः सकलत्रोऽपि सुप्तो मार्गश्रमातुरः ॥२४८॥
रत्नसारः समीपस्थः खड्गव्यग्रकराम्बुजः ।
स्वामिनं सुप्तमालोक्य जातः प्राहरिकस्तदा ॥२४९॥
अधिष्ठाता वटे तत्र गोमुखाह्वानयक्षराट् ।
चक्रेश्वर्या च यक्षिण्या साकं वासमुपस्थितः ॥२५०॥
प्रभूतानीकसंयुक्तं रूपमीनध्वजोपमम् ।
कुमारं सुप्तमालोक्य यक्षमित्याह यक्षिणी ॥२५१॥
कान्तः कान्तान्वितः पुण्याधिकः सेनाविभूषितः ।
क एष कुमरः सुप्तः कुत्र वा याति पत्तने ॥२५२॥
ततो ज्ञानोपयोगेन ज्ञात्वा गोमुखयक्षपः ।
वृत्तान्तश्च कुमारस्य पृष्टः प्राह प्रियां प्रति ॥२५३॥
श्रीवसन्तपुरस्वामि[1]वीरसेननृपात्मजः ।
रत्नमालाङ्गजन्मायं चित्रसेनकुमारकः ॥२५४॥
पित्रापमानितो रत्नसाराभिधसखः स्वयम् ।

1 Z °स्वामी ।

गत्वा देशान्तरे पुण्यात् परिणीय नृपात्मजाम् ॥२५५॥
मातृपितृक्रमाम्भोजप्रणामाय प्रयात्यसौ ।
श्रीवसन्तपुरद्रङ्गं भक्तिभावितमानसः ॥२५६॥
कुमारस्य मृता माता कृपावासितमानसा ।
रामान्या भूपतेर्मान्या मञ्जाता विमलाभिधा ॥२५७॥
वशीकृतक्षितीशाया रतीशासक्तचेतसः ।
गुणसेन. सुतस्तस्या जातोस्ति गुणमन्दिरम् ॥२५८॥
अनेककैतवेनासौ विप्रतार्य धराधवम्[1] ।
निजपुत्रस्य राज्यार्थमुपायान् कुरुत बहून् ॥२५९॥
यदा यास्यति तत्रासौ कुमार. मारसारद ।
तातप्रेमभराक्रान्तो विक्रान्तः समराङ्गणे ॥२६०॥
पुत्रारोहकृते लात्वा दोषदुष्ट तुरङ्गमम् ।
वीरसेनधराधीशस्तदायास्यति सन्मुखम् ॥२६१॥
तुरङ्गावलिका पुण्याद्विलयं यदि यास्यति ।
यन्त्रयुक्तप्रतोली द्रागस्योपरि पतिष्यति ॥२६२॥
यदि पूर्वभवाचीर्णपुण्यपुण्यप्रसादतः ।
अपायापगमश्चास्य कुमारस्य भविष्यति ॥२६३॥
विमातृरचिताद्विघ्नो विषमिश्रितमोदकात् ।

1 A धराधरम् ।

भविष्यति तदैतस्य पुण्यात्स यास्यति क्षयम् ॥२६४॥
गुणसेनस्य राज्यार्थं[1] मारणोपायकत्रयम् ।
चिन्तयिष्यति पुत्रस्य विमलाप्रेरितः पिता ॥२६५॥
पुनरस्य कुमारस्य चतुर्थ्यावलिका त्वसौ ।
स्थितस्य वरपल्यङ्के दारुणात् पन्नगाद्भयम् ॥२६६॥
रत्नसाराख्यमन्त्रिमित्रादावलीनां चतुष्टयम् ।
त्रुटिष्यति कुमारश्चेत्तदा राजा भविष्यति ॥२६७॥
सखा कृतोपकारश्चेत् कस्यापि कथयिष्यति ।
तदा पादादितः शीघ्रं भविष्यति दृषन्मयः ॥२६८॥
वार्तामाख्यायमानां तां श्रुत्वा मन्त्रीशनन्दनः ।
निधाय मानसे गूढं मित्रकृत्यपरोभवत् ॥२६९॥
प्रभातसमये जाते समुत्थाय नृपात्मजः ।
प्रयाणे प्रगुणीभूय चचाल स्वबलान्वितः ॥२७०॥
अविलम्बप्रयाणेन प्राप्ते स्वपुरसन्निधौ ।
वीरसेननृपस्तावत् समागात् पुत्रसन्मुखः ॥२७१॥
श्रीवसन्तपुरोद्याने मिलिते कटके द्वयोः ।
समागते समासन्ने जनके स्वजनान्विते ॥२७२॥
तुरङ्गमात्समुत्तीर्य विचरन् वसुधातले ।

1 Z ०र्थे ।

कुमार: परमानन्दान्ननाम जनकक्रमौ ॥२७३॥
पृष्ट्वा च कृत्रिमप्रेम्णा सुतस्य कुशलादिकम् ।
पुत्राधिरोपणार्थञ्च ददौ दुष्टतुरङ्गमम् ॥२७४॥
चातुर्यान्मन्त्रिपुत्रेण सदृशोन्यस्तुरङ्गम[1] ।
सञ्चारितश्च[2] तत्कालं न ज्ञात केनचित् पुन ॥२७५॥
वाद्यमानेषु वाद्येषु वद्धापनपुरस्सरम् ।
जयमुच्चरत्सु भट्टेषु गीतगानमनोरमम् ॥२७६॥
यावत् प्रतोलीमायात: महेन महताथ स. ।
तावदागत्य मित्रेण तुरङ्गो वदने हत. ॥२७७॥
पश्चात्पादैर्मनागेष चचाल वसुधातले ।
प्रतोली सहसा तावत् पतिता सा जनोपरि ॥२७८॥
लोके हाहारवो जातो विलक्षोभून्महीपति: ।
कुमारो मन्त्रिपुत्रेण रक्षितो मृत्युसङ्कटात् ॥२७९॥
अथ विस्मयचित्तोसौ वीरसेननरेश्वर. ।
आनयन्नन्दन गेहे प्रीतस्तद्विनयादिना ॥२८०॥
कुमारश्चित्रसेनाख्य: सम्प्राप्त: सदने निजे ।
उपमातु: पदद्वन्द्वं ननाम प्रीतमानस: ॥२८१॥
मातस्ते कुशल देहे पुत्रे च कुशलं तव ।

1 A तत्समोऽन्य०; B ०न्यतु० । 2 A सञ्चारि[त]श्च ।

कुशलं तव गेहे च पप्रच्छैवं स भक्तितः ॥२८२॥
तथापि दुष्टचित्ता सा चेतसीति व्यचिन्तयत् ।
विषमोदकदानेन मारयिष्याम्यमुं पुनः ॥२८३॥
निश्चित्येति स्वचित्ते सा चित्रसेनं न्यवेदयत् ।
भोजनं कुरु मे गेहे कुमार स्फारविक्रम ॥२८४॥
कुमारश्चित्रसेनस्तां प्रत्यवोचत्ततो मुदा ।
मातृहस्तस्य पुण्येन भोजनं लभ्यते यतः ॥२८५॥
दानमात्मीयहस्तेन मातृहस्तेन भोजनम् ।
तिलकं विप्रहस्तेन परहस्तेन मर्दनम् ॥२८६॥
ततः सकलसामग्रीं भोजनस्य विधाय च ।
कुमारो मित्रसंयुक्तो भोजनाय निमन्त्रितः ॥२८७॥
भोजनावसरे जाते कुमाराकारणे कृते ।
समोदकेन मित्रेण सहागात् सपरिच्छदः ॥२८८॥
ततो भोजनशालायां मण्डितेष्वासनेषु च ।
राजा[1] राजसुताद्यास्ते उपविष्टा यथाक्रमम् ॥२८९॥
स्थालादीनि विशालानि मण्डयित्वा तदग्रतः ।
परिवेषणवेलायां भोज्यान्यानीय भूरिशः ॥२९०॥
व्यञ्जनानि त्वनेकानि मुक्तानि प्रथमं ततः ।

1 A राजराजसुता० ।

भाजने वीरसेनस्य मुक्ता सुन्दरमोदकाः ॥२६१॥
कुमारे सह मित्रेणोपविष्टेप्येकभाजने ।
कुमारभाजने मुक्तौ मोदकौ तु तथा पुनः ॥२६२॥
मोदकौ दृष्टमात्रौ तु हस्तलाघवविद्यया ।
गृहीतौ मन्त्रिपुत्रेण परौ मुक्तौ स्वपार्श्वत ॥२६३॥
मोदकानन्तरं शालिमुद्गदालिमनोहरम् ।
सद्यस्कघृतसंयुक्त स्फुरद्दध्यादिगोरसम ॥२६४॥
जनकेन समं भुक्त्वा शुचीभूय समुत्थितः ।
चित्रसेनकुमारोसौ मानसे मुमुदे भृशम् ॥२६५॥
ततश्च तिलकं कृत्वा दत्वा ताम्बूलमुत्तमम् ।
परिधाप्याम्बरालङ्कारादिकं प्रेषितो गृहे ॥२६६॥
पद्मावती स्नुषा स्फूर्जदलङ्कराम्बरादिना ।
श्वश्रूसन्मानिता कामं समायाता निजे गृहे ॥२६७॥
दैवानुकूल्यत. पुंसामथवा पुण्ययोगतः ।
सुधायते विषं सर्पः पुष्पमालायते रयात् ॥२६८॥
यद्यप्यस्ति धराधीशो विमलाविप्रतारितः ।
तथापि चित्रसेने च वात्सल्यप्रेमतत्परः ॥२६९॥
कियत्यपि दिने राजाचिन्तयन्नक्रमञ्जसा ।
अङ्गजे मारणोपायमचिन्तयमहं हहा ॥३००॥

पौरुषं धिगिदं मे हि धिग् बुद्धिं विभुतां च धिक् ।
पुत्ररत्ने मया येन चिन्तितं मारणं हहा ॥३०१॥
इति वैराग्यरङ्गेण यावत्तिष्ठति रङ्गितः ।
तावच्चरमतीर्थेशो विहरंस्तत्र चागतः ॥३०२॥
समवसरणं चक्रे प्रदेशे रमणीयके ।
चतुर्विधसुरैः सद्यो दुर्गत्रयविराजितम् ॥३०३॥
चतुर्द्वारस्थितोदारचतुर्वापीमनोरमे ।
उपविष्टो जिनाधीशस्तत्राशोकतरोस्तले ॥३०४॥
अर्हन्तमागतं ज्ञात्वा राजागात् सपरिच्छदः ।
त त्रिः प्रदक्षिणीकृत्य नत्वाग्रे समुपाविशत् ॥३०५॥
भवपाथोधिनिस्तारकारकं पापवारकम् ।
उपदेशं जिनेशस्य शुश्राव श्रावकोत्तमः ॥३०६॥

यथा—

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः ॥३०७॥
कल्लोलचपला लक्ष्मीः सङ्गमाः स्वप्नसन्निभाः ।
वात्याव्यतिकरोत्क्षिप्ततूलतुल्यं तु यौवनम् ॥३०८॥
व्याकुलेनापि चित्तेन धर्मः कार्योन्तरान्तरा ।
मेढीबद्धोपि हि भ्राम्यन् घासग्रासं करोति गौः ॥३०९॥

सम्पत्तौ नियमः शक्तौ सहनं यौवने व्रतम् ।
दारिद्र्ये दानमत्यल्पं महालाभाय जायते ॥३१०॥
मायं व परकलत्तं जो मन्नइ कंचणं कयारसमं ।
जीवेसु य कुणइ दयं सो पुरिसो जंगमं तित्थं ॥३११॥
उपदेशमिति श्रुत्वा राजा राज्यधनादिषु ।
रागं मुमोच वैराग्याज्जलात् कौसुम्भवस्त्रवत् ॥३१२॥
वीरसेनो गृहे गत्वा पृष्ट्वामात्यं शुभे दिने ।
चित्रसेनाभिधं पुत्रं निजराज्ये[1] न्यवेशयत् ॥३१३॥
शृण्वन्तु मद्वचो भूपाः सर्वे मन्त्रीश्वरास्तथा ।
स्थापितोस्ति सुतो राज्ये माननीयो हि मत्सम ॥३१४॥
त्यक्तमोहस्ततो राजा मुत्कलापयति प्रियाम् ।
भव्यरीत्या त्वया स्थेयं दीक्षायां वयमुत्सुकाः ॥३१५॥
इति राज्ञो वचः श्रुत्वा प्रियाप्येनं व्यजिज्ञपत् ।
त्वां विना प्राणनाथाहं कथं प्राणान् धराम्यमून् ॥३१६॥
शृङ्गाराः सुन्दरास्तावत् तावद्राज्यं सुखप्रदम् ।
स्त्रीणां भोगा वरास्तावद् यावद् भर्ता हि सन्निधौ ॥३१७॥
वीरसेनस्ततोवादीत्तावकीन. सुतोप्ययम् ।
लाल्यमानस्तवात्यन्तं भविष्यति सुखप्रदः ॥३१८॥

1 A निजे ।

ततः प्राह धराधीशं राज्ञी सम्वेगसङ्गता ।
कस्यैते नन्दनाः कस्य सम्पदः कस्य चालयाः ॥३१६॥
त्यक्त्वा राज्यश्रियं कोशं तथा सैन्य चतुर्विधम् ।
देशाकरपुरग्रामान् दत्त्वा दानञ्च भूरिशः ॥३२०॥
वैराग्यरञ्जितो राजा प्रियाचारः प्रियान्वितः ।
वर्द्धमानजिनाधीशपार्श्वे जग्राह स व्रतम् ॥३२१॥
पालयन् वरमाचारं समधीतबहुश्रुतः ।
विजहार धरापीठे भव्यजीवान् प्रबोधयन् ॥३२२॥
तेजसा तेजसामीशः सोम. सोमतया तथा ।
चित्रसेनधराधीशः पितेवापालयत् प्रजाः ॥३२३॥
प्रज्ञाजितसुराचार्यो मन्त्रिपञ्चशतोत्तमः ।
रत्नसाराभिधस्तस्य मान्यो मन्त्रीश्वरोभवत् ॥३२४॥
अन्यदा रत्नसाराख्यश्चिन्तां चित्तेकरोन्निशि ।
आवलीत्रयमेतस्य पुण्यतो विलयं गतम् ॥३२५॥
वरं पुण्यं कृतं यत्नात् परत्रात्रफलप्रदम् ।
विमृश्येति नरेशाग्रेवोचत् सत्यमिदं वचः ॥३२६॥
प्राज्यं राज्यं तथारोग्यं भाग्यं सौभाग्यभासुरम् ।
रामा रूपाभिरामा च भवेत् पुण्यप्रभावतः ॥३२७॥
तत्पुण्यमधुना राजन् कुरु सर्वज्ञभाषितम् ।

सर्वपापहर[1] सम्पत्कर दुःखविदारकम् ॥३२८॥
इति मन्त्रिवचः श्रुत्वा पुण्यप्रवणमानसः ।
जीर्णोद्धारान् विनिर्माति दीनोद्धरणकर्मठः ॥३२९॥
अमारिपटहोद्घोषं स्वदेशेकारयन्नृपः ।
पोषं साधर्मिकाणाञ्च जिनार्चा कुरुते मदा ॥३३०॥
एवं विश्वम्भराधीशः प्रियया प्रिययान्वितः ।
रत्नसारसखः सारं पुण्यं पुष्णाति नित्यशः ॥३३१॥
आसने गमने पाने भोजने जिनपूजन ।
शयनेपि समासन्नास्तिष्ठन्त्येते त्रयोपि हि ॥३३२॥
करवालस्फुरत्पाणिः[2] स्वामिभक्तिपरायणः ।
रत्नसारो महामात्यो नित्यं प्राहरिकोभवत् ॥३३३॥
तेषां श्रेयांसि भूयांसि प्रमोदात् कुर्वतां सताम् ।
भुञ्जानानां वरान् भोगान् गते काले कियत्यपि ॥३३४॥
अथान्येद्युर्विभावर्यां सनिद्रं सुप्तयोस्तयोः ।
श्यामलः पन्नगोदर्शि पल्यङ्कोपरि मन्त्रिणा ॥३३५॥
यक्षोक्तं वचनं स्मृत्वा खड्गमादाय वेगतः ।
पातितस्तेन घातेन भूमौ घोरो भुजङ्गमः ॥३३६॥
राज्ञ्या जङ्घाप्रदेशे च पतितं सर्पशोणितम् ।

1 Z सर्व । 2 Z ०स्फुरत्पाणिस्वामि० ।

वस्त्राञ्चलेन मन्त्रीशो भीतो बिन्दुमपाकरोत् ॥३३७॥
प्रबुद्धोथ धराधीशः किमेतदिति वेगतः ।
रत्नसाराभिधं मित्रमपृच्छद्विस्मयाकुलः ॥३३८॥
रत्नसारस्ततो मन्त्री कम्पमानवपुर्लतः ।
पतितः सङ्कटे काममितो व्याघ्र इतस्तटी ॥३३९॥
यदि वच्मि यथातथ्यं भवाम्यश्ममयस्तदा ।
अलीकवचने प्रोक्ते नृपोन्यच्चिन्तयिष्यति ॥३४०॥
उपकारैर्न गृह्यन्ते सेवया न च पौरुषैः ।
दुर्जना इव राजानो नात्मीया हि कथञ्चन ॥३४१॥
रत्नसारस्ततोमात्यश्चेतसीति व्यचिन्तयत् ।
स्वामिनोग्रे मृषाभाषां[1] न ब्रवीति बुधो यतः ॥३४२॥
सत्यं मित्रे प्रियं स्त्रीभिरलीकमधुरं द्विषाम् ।
अनुकूलञ्च सत्यञ्च वक्तव्यं स्वामिना सह ॥३४३॥[2]
एनां वार्तामहं स्वामिन् कथयामि यदा तव ।
तदा दृषन्मयः शीघ्रं भविष्यामि न संशयः ॥३४४॥
जगाद जगतीपालस्तदा विस्मितमानसः ।
कथं वचनमात्रेण पाषाणत्वं[3] प्रजायते ॥३४५॥

---

1 A Z मृषां । 2 Z omits this verse by oversight.
3 A Z पाखाणत्व ।

एतद्वचनमाकर्ण्य रत्नसारः कलानिधिः ।
साहसञ्च समालम्ब्य बभाषे यक्षभाषितम् ॥३४६॥
परिणीय प्रियामेतामागच्छन्तोऽत्र पत्तने ।
स्थिता वटतरोर्मूले जानन्ति स्वामिनः स्वयम् ॥३४७॥
पुरा दुष्टतुरङ्गोत्थावलिका विनिवारिता ।
न ज्ञाता स्वामिनान्येन मानवेनापि केनचित् ॥३४८॥
कथितं वचनं यावद् भूपतेस्तेन मन्त्रिणा ।
सञ्जातो जानुमात्रस्तु सद्यो मन्त्री दृषन्मयः ॥३४९॥
चित्रसेनावनीशेनाग्रतो जल्पेति भाषितः ।
मन्त्रिराजः समाचष्टे द्वितीयावलिकामपि ॥३५०॥
त्वयि प्रतोलीमायाते यावदश्वो हतो मुखे ।
घातितश्च ययौ पश्चात् प्रतोली तावदापतत् ॥३५१॥
तद्वचःकथनाज्जातः कटीं यावद् दृषन्मयः ।
पुनर्भूमिभुजाभाणि जातं किं हु तदग्रतः ॥३५२॥
शृणु राजन् जनन्या ते मोदकौ परिवेषितौ ।
परावृत्यापरौ मुक्तौ मयाज्ञायि न तत्त्वया ॥३५३॥
तृतीयावालिकावादि यावन्मित्रेण रंहसा ।
तावदश्ममयो जातः कण्ठं यावत्स मन्त्रिराट् ॥३५४॥
वृत्तान्तत्रितयं ज्ञात्वा पुनः पृष्टो महीभुजा ।

मन्त्रीशः कथयामास चतुर्थावलिकामपि ॥३५५॥
दोलापर्यङ्कके सुप्ते सकलत्रे त्वयि प्रभो।
भुजङ्गमो मया दृष्टः शृङ्खलातः समुत्तरन् ॥३५६॥
मयासौ घातितः सद्यः पतितं तस्य शोणितम्।
राज्ञीजङ्घोपरिष्टाच्च भीत्या वस्त्रेण मार्जितम् ॥३५७॥
चित्रसेन नराधीश पुण्यपुण्यप्रभावतः।
एतत्ते विलयं प्राप यक्षोक्तापच्चतुष्टयम् ॥३५८॥
इत्युक्त्वा सहसा मन्त्री जातः पाषाणसन्निभः।
पतितः पृथिवीपीठे देववाचा हि नान्यथा ॥३५९॥
मित्रस्यापदमालोक्य राजा दुःखेन दुःखितः।
स्मरन् सारगुणव्रातं मूर्छया न्यपतद्भुवि ॥३६०॥
ततः शीतोपचारेण सुस्थीभूतो नरेश्वरः।
हा भ्रातः प्रिय मित्रेति प्रजल्पन् विललाप सः॥३६१॥
विदेशभ्रमणे दक्षं मित्रार्थकरणक्षमम्।
दुष्प्रापं नररत्नं हा मया मूढेन हारितम् ॥३६२॥
जानतापि मया हा धिगनर्थोयं स्वयं कृतः।
भवितव्यानुसारेण बुद्धिः पुंसां हि जायते ॥३६३॥

यतः—

तादृशी जायते बुद्धिर्व्यवसायाश्च तादृशाः।

महायास्तादृशा ज्ञेया यादृशी भवितव्यता ॥३६४॥
मित्र[1] विना वृथा राज्य वृथा देशा वृथा सुखम् ।
वृथा काशा वृथा सैन्य किं पुनर्जीवितं वृथा ॥३६५॥
तद्वियोगातुरो नून प्राणत्याग करोम्यहम् ।
इष्टबन्धुवियुक्तानां नान्यद् दुःखनिवारणम् ॥३६६॥
विचिन्त्येति निजे चित्ते चित्रसेनो नराधिपः ।
मरणाय समुत्तस्थौ यावच्चिन्ताभराकुलः ॥३६७॥
ज्ञात्वा तावदभिप्राय चित्ते राज्ञीत्यचिन्तयत् ।
असमञ्जसमुत्पन्न राज्यक्षयनिबन्धनम् ॥३६८॥
आत्महानिश्च सर्वेषु लोकेषु वचनीयता ।
येन केनाप्युपायेन क्रियते काललङ्घनम् ॥३६९॥
राज्ञी हृदि विमृश्येति बभाषे भूपति प्रति ।
नाथ कातरता त्याज्यालम्बनीया हि धीरता ॥३७०॥
प्रिय दुःखे समुत्पन्ने मृत्युमिच्छन्ति कातराः ।
विवेकिनः पुनर्धीराः पुण्य कुर्वन्ति भूरिशः ॥३७१॥
वल्लभैक उपायास्ति करोषि मद्वचो यदि ।
दातव्य दानशालायामर्थिनां दानमीहितम् ॥३७२॥
तेन लुब्धाः समेष्यन्ति देशदेशान्तरस्थिताः ।

1 Z मत्रि ।

रक्ताम्बरजटाधारियोगिसन्यासिनोपि　हि ॥३७३॥
कलावन्तः परिव्राजो निमित्तज्ञाश्च लिङ्गिनः ।
तन्त्रयन्त्रकमन्त्रज्ञा　आगमिष्यन्त्यनेकशः ॥३७४॥
कोपि जीवापयेदेन　मन्त्रादिक्रियया　यदि ।
आवयोश्च तदा पुण्यात् समिद्ध्यन्ति मनोरथाः ॥३७५॥
इयं क्रिया प्रियाप्रोक्ता कृता भूपेन रहसा ।
वैदेशिकान् समायातान् प्रीणितान् दानमानतः ॥३७६॥
पृच्छति स्म प्रतीकार　मित्रदुःखनिवारकम् ।
कथित यद्यथा येन कृत भूपेन तत्तथा ॥३७७॥
कष्ट न याति मित्रस्य प्रतीकारे कृतेपि हि ।
निराशो वसुधाधीशः पुनश्चिन्तातुरोभवत् ॥३७८॥
भोगाभोगसभागीतनृत्यादिकपराङ्मुखः　।
मित्रस्य चिन्तया राजा राज्यचिन्ता च नाकरोत् ॥३७९॥
अन्यदा भूपतिश्चित्ते रजन्यामित्यचिन्तयत् ।
आवली कथिता येन यक्षेशेन महात्मना ॥३८०॥
स हि मित्रप्रतीकार कथयिष्यति निश्चितम् ।
विचारयन् मनस्येवं व्यतीयाय निशामसौ ॥३८१॥
जाते सूर्योदये राजा जीर्णमन्त्रीश्वरस्य च ।

1 A ०म्बरा ज० ।

राज्यभारं समारोप्य प्रयाणप्रगुणोभवत् ॥३८२॥
मुत्कलाप्य प्रियां स्वीयां खड्गमादाय निर्भयः[1] ।
चित्रसेननराधीशश्चलितः शुभवासरे ॥३८३॥
कियद्भिर्वासरैर्भूमिप्रभुः प्राप्य वटद्रुमम् ।
मित्रचिन्तातुरस्वान्तः सुप्तस्तत्र तरोस्तले ॥३८४॥
मित्रदुःखाकुलः काम मीनः स्तोक इवोदके ।
यक्षेशयक्षिणीभ्यां स सुप्तस्तत्र विलोकितः ॥३८५॥
यक्षिणी कथयामास कृपावासितमानसा ।
स्वामिन्नेष पुमान् कोसौ केन दुःखेन दुःखितः ॥३८६॥
यक्षोवोचत् प्रिये मर्त्यमेन जानासि नो किमु ।
सकलत्रः समित्रासौ ससैन्योत्र स्थितः पुरा ॥३८७॥
एतद्वचनमाकर्ण्य परदुःखेन दुःखिता ।
पप्रच्छ यक्षिणी यक्षं दुःखितोसौ कथं विभो ॥३८८॥
यक्षोवादीत् कुमारोसौ गुणानामेकमन्दिरम् ।
इष्टमित्रवियोगार्त्तो भ्रमत्येको धरातले ॥३८९॥
यक्षिणी प्राह हे स्वामिन् वियुक्तोसौ कथं ततः ।
बभाषे यक्षराजोपि भद्रे त्वं कारणं शृणु ॥३९०॥
तवाग्रे यन्मया पूर्वमवाच्यापच्चतुष्टयम् ।

1 Z निर्भय ।

स्फेटितं तत् कुमारस्य मन्त्रिपुत्रेण पुरयत: ॥३६१॥
निराकृतावलीश्चेत्स्म कस्यापि कथयिष्यति ।
तदा दृषन्मयीभूय पतिष्यत्यवनीतलं ॥३६२॥
रत्नसाराभिधः स्निग्धः स्फेटितापच्चतुष्टयम् ।
निरूप्य तत् कुमाराग्रे जातः पाषाणसन्निभः ॥३६३॥
तद्वियोगातुरश्चैष[1] बम्भ्रमीत्यभितो यतः ।
स्नेहो दुःखतरोर्मूलं स्नेहोनर्थपरम्परा ॥३६४॥
दयार्द्रहृदयावोचद् यक्षस्याग्रे च यक्षिणी ।
एतन्मित्रप्रतीकारो विद्यते वा न वा विभो ॥३६५॥
विमृश्य हृदये यक्षराज. प्राह प्रियां प्रति ।
अस्य रोगप्रतीकारं कथयामि प्रिये शृणु ॥३६६॥
कापि स्त्री शीलसम्पन्नोत्सङ्गस्थाङ्गजसंयुता ।
सर्वाङ्गं चेत्स्पृशेदस्य नीरोगस्तत्क्षणाद् भवेत् ॥३६७॥
चित्रसेनो नृपो वार्तामाकर्यामूलचूलतः ।
निर्धार्य हृदये बाढं सुप्तो निर्भरनिद्रया ॥३६८॥
यक्षोक्त वचन श्रुत्वा धृत्वानन्दं हृदन्तरं ।
कुमार प्रातरुत्थाय चलितः स्वपुर प्रति ॥३६९॥
अविलम्बप्रयाणेन भूपतिर्मुदिताशयः ।

1 Z ० श्चैव ।

कियद्भिर्दिवसैः प्राप वसन्तपुरपत्तनम् ॥४००॥
हर्षिताश्च प्रजाः सर्वा भूमिवल्लभदर्शनात् ।
पद्मावती प्रियं दृष्ट्वा जाता प्रेमपरायणा ॥४०१॥
आसन्नप्रसवां राज्ञीं तस्मिन्नवसरेऽनघः ।
समालोक्य सुखं प्राप चित्रसेननरेश्वरः ॥४०२॥
वाञ्छितार्थाश्च सिद्धा मे नूनं पुण्यप्रभावतः ।
इति ध्यात्वा निजं राज्यं पालयामास भूपतिः ॥४०३॥
चित्रसेननराधीशः परोपकृतिकर्मठः ।
धर्मध्यानमनाः कामं गमयामास वासरान् ॥४०४॥
शुभे दिने शुभे लग्ने शुभस्थानगतग्रहे ।
मुदा पद्मावती राज्ञी सुतरत्नमजीजनत् ॥४०५॥
महानन्दान्महीपालः पुत्रजन्ममहोत्सवे ।
पूजां सर्वत्र चैत्येषु चकार दिवसाष्टकम् ॥४०६॥
अमारिपटहोद्घोषं पोषं सर्वजनस्य च ।
दीनोद्धारादिकं पुण्यं कारयामास भूपतिः ॥४०७॥
इत्युत्सवभराज्जातेष्वेकादशदिनेष्वथ ।
भूपतिर्बहुमानेनाभोजयत् स्वजनान् बहून् ॥४०८॥
भोजनानन्तरं सर्वे मिलिता राजमन्दिरे ।
सन्मानदानतस्तुष्टा नामस्थापनसत्क्षणे ॥४०९॥

राज्ञोचे मत्कुले पुत्रो जातः पुण्यप्रभावतः ।
ततस्तदनुमानेन धर्मसेनाभिधाख्य च ॥४१०॥
तैरेव स्वजनैः सार्द्धं पद्मावत्या समन्वितः ।
वाद्यमानेषु वाद्येषु दानशालां गतो नृपः ॥४११॥
रत्नसारं समुत्पाद्य स्मृत्वा यक्षवचो हृदि ।
यथोक्तविधिना तस्य स्नानपूजादिकं व्यधात् ॥४१२॥
ततः पद्मावती राज्ञी निजात्सङ्गस्थिताङ्गजा ।
परमेष्ठ्यभिधं मन्त्रं सस्मृत्येति वचोऽब्रवीत् ॥४१३॥
शृण्वन्तु लोकपाला भो. सूर्यचन्द्रग्रहादयः ।
क्षेत्रपालाश्च वनालाः सर्वे वैमानिकास्तथा ॥४१४॥
मनसा वपुषा वाचा शीलं चेदस्ति निर्मलम् ।
तदा हि मत्करस्पर्शात् सज्जीभवतु मन्त्रिस. ॥४१५॥
इत्युक्त्वा स्वकरस्पृष्टमात्रेणात्पन्नचेतनः ।
तत्क्षणादुपविष्टोऽभूद् यथा सुप्तोत्थितो नरः ॥४१६॥
चित्रसेनस्ततो राजा रत्नसारसमन्वितः ।
स्वराज्यं पालयामास धर्मकर्मपरायणः ॥४१७॥
मन्त्रिपद्मावतीयुक्तश्चित्रसेननराधिप ।
ज्ञात्वा पुण्यफलं जातो विशेषाद्धर्मतत्परः ॥४१८॥
शिष्टानां पालने धीमानशिष्टानामपालने ।

कीर्ति विस्तारयामास दानशीलादिपुण्यतः ॥४१६॥
अन्येद्युस्त सभासीनं मन्त्रिसामन्तशोभितम् ।
नरः कोपि समागत्य विज्ञापयति भूपतिम् ॥४२०॥
देव सिंहपुरस्वामी वर्तते सिंहशेखर ।
गर्वितो भूरिसैन्येन भवत्सीमविनाशकृत् ॥४२१॥
विधत्ते मार्गविध्वंस मुष्णाति पथिकान् बहून् ।
न सेवां कुरुते दण्ड न ददाति कदाप्यसौ ॥४२२॥
सापराधमिति श्रुत्वा भूपो दूतमुखात्तत. ।
दुन्दुभि दापयामास कोपाटोपारुणेक्षण ॥४२३॥
समर्प्य कवचानेकशस्त्रालीतुरगादिकम ।
सारसत्कारतः सज्जीचकार सुभटान् नृपः ॥४२४॥
चतुरङ्गचमूयुक्तश्चित्रसेननरेश्वरः ।
वाद्यमानस्फुरद्वाद्यश्चचाल स्वपुरात्ततः ॥४२५॥
अतुच्छमत्सराक्रान्तः कियद्भिर्वासरैस्ततः ।
भूपतिर्दण्डकारण्ये सम्प्राप भयभीषणे ॥४२६॥
निशीथसमये जाते सुप्तेषु सैनिकेष्वथ ।
अकस्मात्क्रन्दनाराव श्रुत्वा राजा व्यचिन्तयत् ॥४२७॥
अस्यां निर्मानुषाटव्यां श्रूयते क्रन्दनं किमु ।
विमृश्येति निजे चित्ते खड्गपाणिर्नृपोचलत् ॥४२८॥

आक्रन्दनानुसारेण गतो यावत्कियद्भुवम् ।
तावत्तरारधाभागेपश्यन् कमपि पूरुषम्[1] ॥४२९॥
बद्धं निगडबन्धेन कीलितं लोहकीलकैः ।
दिव्यरूपधरं दिव्यवेषालङ्कारसुन्दरम् ॥४३०॥
चित्रसेननराधीशः पप्रच्छेति नरं प्रति ।
कस्त्वं कस्य सुतः कस्यावस्था ते कथमीदृशी ॥४३१॥
ततः स पुरुषः प्राह पीडया पीडितोपि सन् ।
ममाश्चर्यकरीं वार्त्ता शृणु वीरशिरोमणे ॥४३२॥
बन्धनाच्छोटय त्वं मां कीलकांश्च निराकुरु ।
कथयामि स्ववृत्तान्तं निःशल्यः सन् भवत्पुरः ॥४३३॥
तथा कृते नरः प्राह वैताढ्याभिधपर्वते ।
उत्तरश्रेणिशृङ्गारं नाम्ना हेमपुरं पुरम् ॥४३४॥
तत्रास्ति विश्वविख्यातो विद्याधरशिरोमणिः ।
दानादिगुणसम्पूर्णो राजा हेमरथाभिधः ॥४३५
तत्प्रिया हेममालास्ति हेममालेव निर्मला ।
तत्कुक्षिसम्भवो नाम्ना हेममालीत्यहं सुतः ॥४३६॥
हेमचूलाप्रियायुक्तः स्थितः सुन्दरमन्दिरे ।
सारसंसारसौख्यानि विलसामि यथारुचि ॥४३७॥

1 A पुरु० ।

अन्यदा सकलत्रस्य सञ्जातः सुखितस्य मे ।
नन्दीश्वरवरद्वीपतीर्थयात्रामनोरथ. ॥४३८॥
मनोरमविमानस्थः प्रियया प्रिययान्वित. ।
तीर्थानि प्रणमन् मार्गे यावदत्र समागत: ॥४३९॥
मत्पृष्ठतः समायातो मत्प्रियालुब्धमानसः ।
रत्नचूडाभिधो दुष्टविद्याधरभटैर्वृतः ॥४४०॥
निष्कृपः किल पापात्मा विधाय मम बन्धनम् ।
मद्वल्लभां समादाय जगाम निजधाम सः ॥४४१॥
हेममालिवचः श्रुत्वा उपकारपरात्मना ।
व्रणसरोहिणीलेपात् सज्जाङ्गः सहसा कृत. ॥४४२॥
राज्ञश्चरणमानम्य हेममाली व्यजिज्ञपत् ।
मोचितोहं यथा देव तथा वालय मत्प्रियाम् ॥४४३॥
भूपस्तद्वचनं श्रुत्वा परोपकृतितत्परः ।
तेन सार्द्धं विमानस्थश्चालाचलविक्रमः ॥४४४॥
भूपतिः कियतीं भूमिं यावद् गच्छति चाग्रतः ।
स्थितस्तरुतले तावद् दृष्टः पापमना रिपुः ॥४४५॥
पारदारिक पापात्मन् क्व गमिष्यसि साम्प्रतम् ।
चित्रसेननरेशेन हक्कितश्चेति कम्पितः ॥४४६॥
आकस्मिकवचः श्रुत्वा सर्वे भीताः पलायिता. ।

एकाकी स स्थितश्चौरः सङ्ग्रामाय समुद्यतः ॥४४७॥
क्लीवत्रासकरे युद्धे सञ्जाते च परस्परम् ।
चित्रसेनधरेशेन निर्जित. पारदारिकः ॥४४८॥
स मृत्युभयभीतः सन् समादाय मुखे तृणम् ।
पतित्वा भूपतेः पादौ पुनरेवं व्यजिज्ञपत् ॥४४९॥
नेत कान्तिपुरेशस्य रत्नचूडाभिधः सुतः ।
विद्यां साधयितुं शैले गतोह गन्धमादने ॥४५०॥
विद्यायाः साधन कृत्वा परिवारपरावृतः ।
पश्यन् विश्वम्भराश्चर्यमभ्रम च यदृच्छया ॥४५१॥
हेममाली प्रियायुक्तो मिलितो मम सन्मुखम् ।
विलोक्य तद्वधूरूप जातोहं कामपीडितः ॥४५२॥
मामन्यायमतिं मुक्त्वा विद्याधिष्ठायिका गता ।
ततो विगतविद्योहं जातो विह्वलमानसः ॥४५३॥
समीक्ष्य तदवस्थ मां हसितं मित्रमण्डलम् ।
विलोक्य कौतुकं कामं हास्यं कस्य न जायते ॥४५४॥
अट्टट्टहासमाकर्ण्य कुपितो हेममाल्यसौ ।
विरूपवचनैर्गालिं ददानो न निवर्तते ॥४५५॥
ततः कोपान्मया देव बन्धितः कीलितोप्यसौ ।
तत्कान्ता च समादाय स्थितोहं काननान्तरे ॥४५६॥

विनोदेन मया पृष्टा कामि त्वं कस्य वा सुता ।
ततः श्रुते समाचारं ज्ञातासौ गोत्रकन्यका ॥४५७॥
तावत्त्वदीयहक्काभिर्वयस्या कातरा मम ।
कांदिशीका' द्रुतं नष्टाः सिंहनादादिव द्विपा. ॥४५८॥
मया शीलव्रतं पूर्वं गृहीतं गुरुसन्निधौ ।
अन्यथा कामिनः केपि पृच्छन्ति किं कुलादिकम् ॥४५९॥
रत्नचूडवचः श्रुत्वा चित्रसेननराधिपः ।
प्रशंसां कुरुते तस्य वार वारं गुणादर. ॥४६०॥
उपकारपरा धन्या दीनोद्धारपरास्तथा ।
परकार्यकरा धन्या धन्या शीलधरा नराः ॥४६१॥
हेममाली नमस्कृत्य राज्ञश्चरणपङ्कजम् ।
इति विज्ञापयामास विनयानतमस्तकः ॥४६२॥
जीवदानं धराधीश न दत्तं मम केवलम् ।
कुलं हेमरथस्यापि ब्रुडदद्याद्धृत त्वया ॥४६३॥
सद्य. प्रसादमाधाय देव मामनृणीकुरु ।
रत्नद्वयञ्च मत्पार्श्वाद् गृहाणाश्रितवत्सल ॥४६४॥
अनेकतीर्थयात्रार्थं नराधीश नभस्तले ।
पल्यङ्केन यथाकामगामिना गम्यतंभितः ॥४६५॥

1 Z कांदिशीका ।

सहारप्रेरिते दण्डे भवेत् सहारकारणम् ।
सृष्टिमञ्चारिते तस्मिन् सञ्जीवेत् सकल पुनः ॥४६६॥
मनोभिगामिपल्यङ्कं दण्डं शत्रुजयाभिधम् ।
इति रत्नद्वयं देव गृहाणानुगृहाण माम् ॥४६७॥
इत्युक्त्वा वसुधानेतुर्विद्याधरशिरोमणिः ।
हेममाली ददौ भक्त्या स रत्नद्वयमुत्तमम् ॥४६८॥
पल्यङ्कं रत्नदण्डश्च समादाय धराधव. ।
हेममालिगुणोच्चारं विदधाति पुन. पुनः ॥४६९॥
रत्नचूडः समुत्थाय प्राञ्जलिर्न्यवदन्नृपम् ।
नाथ रूपपरावर्तगुटिकां त्वं गृहाण मे ॥४७०॥
गुटिकामर्पितां लात्वा तयोराकाशचारिणोः ।
विरोधञ्च निराकृत्य सन्तोषं नृपतिर्व्यधात् ॥४७१॥
प्रभातसमये जाते द्वावपि व्योमचारिणौ ।
प्रीतिपूर्वं स संमान्य प्रैषीन्निजपुर प्रति ॥४७२॥
नृपः सैन्यं समायातो विबोध्याशु स्वसैनिकान् ।
चतुरङ्गचमूयुक्ता यावद् गच्छति चाग्रतः ॥४७३॥
तावत्सिंहपुराधीशप्रेषितो दूत आगत. ।
नत्वा[1] विश्वम्भराधीशमवादीत् स्वामिनोदितम् ॥४७४॥

1 Z तथा instead of नत्वा ।

विज्ञापयति मद्वक्त्रान् मत्स्वामी रत्नशेखरः ।
नात्रागन्तव्यमुर्वीश स्वश्रेयो यदि वाञ्छसि ॥४७५॥
इति दूतवचः श्रुत्वा कुपितो मेदिनीपतिः ।
अवध्यो भूभुजां दूतो गच्छ गच्छ ममाग्रतः ॥४७६॥
भणनीय स्वभूपाग्रे संनह्य त्वं स्थिरीभव ।
चित्रसेनः समायातस्त्वद्वर्वाग्निपयोधरः ॥४७७॥
गत्वा दूतेन विज्ञप्तो रत्नशेखरभूपतिः ।
आगतश्चित्रसेनोसौ राजन् सज्जीभव द्रुतम् ॥४७८॥
एतद्वचनमाकर्ण्य कोपप्रस्फुरिताधरः ।
चचाल सन्मुख सद्यो रत्नशेखरभूमिपः ॥४७९॥
अन्योन्यमुभयोर्जाते सैन्ययोः किल सङ्गमे ।
योधा युद्धाङ्गणे योद्धुं सावधानाः स्थिताः पुनः ॥४८०॥
रथिका रथिभिः सार्द्धं गजस्थाश्च गजस्थितैः ।
हयस्था हयसंस्थैश्च चक्रुर्युद्ध परस्परम् ॥४८१॥
पत्रवाहप्रवाहेणाच्छादितं[1] गगनाङ्गणम् ।
किं श्रमाकुलचित्तानां वीराणामातपच्छिदे ॥४८२॥
यथा विन्ध्याद्रिमध्यस्था गजा युध्यन्ति दुर्द्धराः ।
उभयोः सैन्ययोस्तद्वत् सञ्जातं समराङ्गणम् ॥४८३॥

1 Z कङ्कपत्रप्रवा० ।

पश्यन् सङ्ग्रामकौशल्यं चित्रसेननरेश्वर. ।
रत्नशेखरसैन्यस्य प्रशंसा कुरुतेतराम् ।४८४॥
यदा सिंहपुरस्वामी सङ्ग्रामान्न निवर्तते ।
दण्डरत्न तदा कोपादानीत करगोचरे ॥४८५॥
परमेष्ठ्यभिधं मन्त्रं स्मृत्वा निजगुरु पुन. ।
वामतो वसुधेशेन दण्डरत्नं च नोदितम ॥४८६॥
वैरिसेना ततः सर्वा पतिता भूमिमण्डले ।
एक एव स्थितस्तत्र रत्नशेखरभूपतिः ॥४८७॥
तुरङ्गमात् समुत्तीर्य विनयानतमस्तकः ।
ननाम भूपतेः पादौ न हि प्रीतिर्भयं विना ॥४८८॥
करौ च कुड्मलीकृत्य भूमिजानि व्यजिज्ञपत् ।
अपराधिषु यो दण्डस्त दण्ड कुरु मे विभो ॥४८९॥
इति श्रुत्वा धरेशेन कृपापूरितचेतसा ।
सृष्ट्या सञ्चारिते दण्डे सेना सुस्थाभवत्कृता ॥४९०॥
चित्रसेननरेशेन रत्नशेखरनामकः ।
गत्वा सिंहपुरद्रङ्गे स्थापितः कृतसेवकः ॥४९१॥
आज्ञायाः पालकं कृत्वा गृहीत्वा दण्डमद्भुतम् ।
सञ्चचालाचलाधीशः ससैन्यः स्वपुरं प्रति ॥४९२॥

वाद्यमानस्फुरद्वाद्यश्चतुरङ्गचमूवृतः ।

आददानोतुलं दण्ड मीमस्थवसुधाभुजाम ॥४९३॥
अनुक्रमेण सम्प्राप्त पत्तनोपान्तकानने ।
मन्त्रिणा रत्नसारेण श्रुतो राजा समागत ॥४९४॥
भर्तुरागमन श्रुत्वा पद्मावत्यपि हर्षतः[1] ।
उत्सव कारयामास वसन्तपुरपत्तने ॥४९५॥
सन्मुखश्चलितो मन्त्री परिच्छदसमन्वितः ।
समस्तः पुरलोकापि प्रमोदाञ्चितमानस ।४९६॥
उपायनं समादाय मिलिता मन्त्रिपुङ्गवः ।
पपात भूपतेः पादौ प्रभूतप्रेमपूरितः ॥४९७॥
भूपेन सहसोत्थाय समालिङ्ग्य च निर्भरम् ।
दत्त्वार्धमासन तादात्म पृष्टः कुशलादिकम् ॥४९८॥
ततोभीष्टस्य पुत्रस्य पुरस्यान्तःपुरस्य च ।
गजवाजिरथादीनां पप्रच्छ कुशलं नृपः ॥४९९॥
ततो मन्त्रिवरोपेतश्चलितो वसुधेश्वर. ।
वनक्रीडां प्रकुर्वाणो गतो गोपुरसन्निधौ ॥५००॥
धर्मसेनाभिधः पुत्र आगतः सपरिच्छदः ।
पितुः पादयुगं भक्त्या ननामोद्दामसम्मदः ॥५०१॥
आलिलिङ्गे ततो भूपः पुत्रं प्रणयपूर्वकम् ।

1 A हर्षितः evidently for हर्षतः or हर्षिता ।

भवसन्तापतापौघविनाशनसुधाकरम् ॥५०२॥
सुतरत्नं समादाय निजोत्सङ्गे निवेश्य[1] च ।
प्रविवेश विशामीशः पुरान्तः प्रवरोत्सवम् ॥५०३॥
पूज्यमानो मुदा पौरैर्गीयमानोऽङ्गनाजनैः ।
स्तूयमानो विपश्चिद्भिः प्रविष्टो नृपतिर्गृहे ॥५०४॥
सिंहासनसमासीनः सन्तोष्य वचनैः शुभैः ।
विसृज्य सैनिकान् सर्वान् जगामान्तःपुरान्तरे ॥५०५॥
दृष्टे प्राणप्रिये पद्मावती राज्ञी समुत्थिता ।
पादपद्मं मुदा पत्युः प्राणमत् प्रणयान्विता ॥५०६॥
त्रयोऽपि मिलितास्तत्र राजा राज्ञी च मन्त्रिराट् ।
दानशीलादिकं धर्मं सृजन्ति स्म निरन्तरम् ॥५०७॥
प्रासादे विलसन्नादे सर्वक्षीणाष्टकर्मणाम् ।
प्रमोदात् पूजयन्ति स्म प्रतिमाः प्रतिवासरम् ॥५०८॥
सम्यक्त्वपूर्वकं लात्वा व्रतानि द्वादशादरात् ।
संसेवन्ते स्म साधूनां भावतश्चरणानमी ॥५०९॥
पूर्वपुण्यप्रभावेन प्राप्तानि विशदाशयाः ।
राज्यसौख्यान्यखण्डानि भुञ्जन्ति[2] स्म त्रयोऽप्यमी ॥५१०॥
पुण्यात्मानस्त्रयोऽन्येद्युः सुखासीना गृहान्तरे ।

---

1 A निविस्य; B निविश्य । 2 A जुंजति; Z भुजति ।

प्रवृत्तिं रचयामासुः पल्यङ्कस्य प्रमोदतः ॥५११॥
यदि पल्यङ्करत्नस्य प्रभावः प्रवरो भवेत् ।
अनेकानि च तीर्थानि न क्रियन्तेधुना कथम् ॥५१२॥
बभाषे भूपतिर्देवि नान्यथा तस्य भाषितम् ।
दण्डः परीक्षित. पूर्वमधुनाय परीक्ष्यतं ॥५१३॥
समग्रामपि सामग्रीं पूजोपकरणादिकाम् ।
समादाय सदानन्दात् पल्यङ्के ते स्थितास्त्रयः ॥५१४॥
अष्टापदाभिधं तीर्थं स्मृत्वा हुङ्कारमात्रतः ।
उत्पपात स पल्यङ्को वेगतो गगनाङ्गणे ॥५१५॥
पुण्यात्मानस्त्रयोप्येते पल्यङ्कोपरिसस्थिताः ।
पश्यन्तो वसुधाश्चर्यं[1] प्राप्ता अष्टापदाचले ॥५१६॥
तत्रैकयोजनायामं चतुर्द्वारं सतोरणम् ।
गव्यूतत्रितयोत्तुङ्ग भरतेश्वरकारितम् ॥५१७॥
शातकुम्भमयं कुम्भसुन्दरं[2] ध्वजराजितम् ।
प्रासादं जगदीशानां ददृशुस्ते त्रयो मुदा ॥५१८॥
स्वर्गमण्डपसङ्काशा मण्डपास्तत्पुरो वराः ।
तदन्तः पीठिका देवच्छन्दके वेदिकास्तथा ॥५१९॥
नित्यार्हत्प्रतिमा रत्नमय्यो मञ्जुलपीठिकाः ।

1 Z वासुधा० । 2 Z कुम्भ सुन्दरं ।

प्रातिहार्याष्टकोपेताश्चतस्रोऽब्जासनस्थिताः ॥५२०॥
स्वस्वमानाङ्कवर्णाढ्याश्चतुर्विंशतिरर्हताम् ।
देवच्छन्दे विराजन्ते मूर्तयो मणिरत्नजाः ॥५२१॥
छत्रत्रयं तदुपरि प्रत्येकमपि चामरे ।
यक्षा आराधकाश्चान्ये शोभन्ते किन्नरध्वजाः ॥५२२॥
बन्धूनां पूर्वजानां च भगिन्योरपि मूर्तयः ।
कारिता भरतेशेन भक्तिप्रह्वा निजापि च ॥५२३॥
प्रासादात् परितश्चैत्यद्रुमाः कल्पद्रुमा अपि ।
सरांसि दीर्घिका वाप्यो मठाः सन्ति मनोरमाः ॥५२४॥
चैत्याद्बहिः स्तूपमेकमुच्चं रत्नमयं विभोः ।
बन्धूनामपि चान्येषाम् भान्ति स्तूपानि पर्वते ॥५२५॥
इत्यादिराजिते सिंहनिषद्याख्यजिनालये ।
नैषेधिकीत्रयीमुक्त्वा प्रविष्टाः शुचयस्त्रयः ॥५२६॥
जिनान् प्रदक्षिणीकृत्य प्रतिमाः पावनैर्जलैः ।
संस्नाप्य मृदुभिर्वस्त्रैर्ममृजुर्विलसन्मृजान् ॥५२७॥
काश्मीरभवकर्पूरकस्तूरीचन्दनद्रवैः ।
पाणिभिः परमेशानां मुदा चक्रुर्विलेपनम् ॥५२८॥
पुष्पौघैः पूजयामासुस्ते जिनेशान् सुगन्धिभिः ।
कुर्वन्ति स्म ततो धूपं सार्वाग्रेगुरुसम्भवम् ॥५२९॥

तण्डुलैर्मणिपीठे च वितेनुर्मङ्गलाष्टकम् ।
जिनाग्रे ढौकयामासुर्लाङ्गल्यादिफलावलीम् ॥५३०॥
हेमदण्डमनोहारिध्वजारोपं वितेनिरे ।
ततो मङ्गलदीपेन साकमारात्रिकं व्यधुः ॥५३१॥
अथ भक्तिभरोत्फुल्लवपुषस्ते त्रयोपि हि ।
गुणौघं वर्णयामासुरानन्दात् सकलार्हताम् ॥५३२॥
सदानन्दरमाभोगरमाप्राणप्रियोपमाः ।
भवन्तु परमात्मानः परमाधीशताकृते ॥५३३॥
प्रमादप्रभवोन्मादवैरिवारनिवारकाः ।
सर्वेषां सुखदाः सर्वे सर्वदा सर्वदर्शिन. ॥५३४॥
दुष्टाष्टकर्मनिर्मुक्ता मुक्ता निर्मलकीर्तयः ।
विज्ञातत्रिजगद्भावा भावायाभयदाः सताम् ॥५३५॥
देशनास्वर्नदीनीरपवित्रितजगत्त्रयाः ।
जयन्तु जगतामीशाः प्राप्तानन्तचतुष्टयाः ॥५३६॥
कल्याणावलिकर्तारो हर्तारा रागविद्विषाम् ।
नाभेयाद्याश्च वीरान्ता रमन्तां मम मानसे ॥५३७॥
अष्टापदे जिनाधीशान् ये वन्दन्ते स्वलब्धित. ।
तस्मिन्नेव भवे यान्ति मानवास्ते महोदयम् ॥५३८॥
एवं विशारदैर्नूता विश्वत्रितयविश्रुताः ।

बोधिबीजकृते कामं सतां सन्तु स्वयम्भुवः ॥५३९॥
इति स्तुत्वा जिनाधीशान् कृत्वा च सफलं जनुः ।
पुनः पल्यङ्कमारुह्यागता निजपुरे त्रयः ॥५४०॥
पुण्यप्रभावतः प्राप्त मित्रपत्नीसमन्वितः ।
पालयामास राज्यं स्वं भूपतिर्गतकण्टकम् ॥५४१॥
अन्यदा पर्षदासीनं सामन्तादिकसेवितम् ।
आरामिकः समागत्य भूमिपालं व्यजिज्ञपत् ॥५४२॥
स्वामिन् मनोरमोद्याने सुरासुरनिषेवितः[1] ।
समागात् केवलज्ञानी दमसारमुनीश्वरः ॥५४३॥
इति श्रुत्वा महीनेता वसनाभरणादिकम् ।
सन्तुष्टः प्रददौ तस्मै साध्वागमनशंसिने ५४४॥
भूरिभावेन सर्वद्धर्या पुत्रमित्रकलत्रयुक् ।
नन्तु साधुपदाम्भोजं जगाम जगतीपतिः । ॥५४५॥
तं त्रिः प्रदक्षिणीकृत्य नत्वा केवलिनं मुदा ।
परिवारवृतो राजा यथास्थानमुपाविशत् ॥५४६॥
समारेभे निरारम्भा साधुना धर्मदेशना ।
भवदुस्तापपाथोधिनिस्तारणतरीसमा ॥५४७॥

यथा—

1 A निषेविते ।

चत्तारि परमंगाणि दुल्लहाणीह जंतुणो ।
माणुसत्तं सुई सद्धा सजमंमि य[1] वीरियं ॥५४८॥
जरा जाव न पीलेइ वाही जाव न वड्ढइ ।
जाविंदिया[2] न हायंति ताव धम्मं समायरे ॥५४९॥
संबुज्झह किं न बुज्झह संबोही खलु पेच्च दुल्लहा ।
नो हुवणमंति राइओ नो सुलहं पुणरावि जीवियं ॥५५०॥
इत्यादिदेशनां श्रुत्वा प्रतिबुद्धास्त्रयोप्यमी ।
धर्मसेनसुतो राज्ञा राज्ये संस्थापितो निजे ॥५५१॥
मन्त्रिणा रत्नसारेण सुतः सुमतिनामकः ।
सुराचार्यसमप्रज्ञः समस्थापि निजे पदे ॥५५२॥
त्यक्त्वा राज्यर्द्धिदेशादीन् दत्वा दान यथोचितम् ।
कृत्वा तीर्थंकृतां पूजां श्रित्वा संवेगमुत्तमम् ॥५५३॥
समं मन्त्रिकलत्राभ्यां चित्रसेननरेश्वरः ।
दमसारगुरोः पार्श्वे जग्राह व्रतमादरात् ॥५५४॥
चिरं चारित्रमाराध्य कृत्वान्तेनशनं तथा ।
ते प्राप्ता अच्युते कल्पे सामुदायिककर्मतः ॥५५५॥
समुदायाद्यथाद्यैस्तैर्यत् कृतं सुकृतं त्रिभिः ।
समुदायसुखं भुक्त्वा क्रमाद् यास्यन्ति ते शिवम् ॥५५६॥

1 Z omits य । 2 A जावदिया ।

शीलपालनतो ह्येतैर्भुक्त्वा राज्यश्रियं वराम् ।
जिनधर्मं समाराध्य सम्प्राप्तं स्वर्गजं[1] सुखम् ॥५५७॥
दुष्टारिष्टानि नश्यन्ति नृणां शीलप्रभावतः
शाकिनीभूतवेतालसिंहसर्पभयानि च ॥५५८॥
राज्यर्द्धिर्वाञ्छिता लक्ष्मी रम्या रामा वराः सुताः ।
दीर्घायुर्विशदा कीर्तिः प्राप्यन्त शीलपालनात् ॥५५९॥
इत्थं धराधीश्वरचित्रसेन–
पद्मावतीशीलभवप्रभावम् ।
निशम्य लोकै किल शीलनीय
शील सदानन्दकरं सदैव ॥५६०॥
तपगणगगनविभासनगगनध्वजसन्निभा सुवर्णविभा ।
श्रीविजयदानसूरीश्वरा बभूवुर्युगप्रवरा ॥५६१॥
तच्छिष्यजगन्मल्लाभिधविबुधा लब्धवर्णगजमल्ला ।
तच्छिष्यबुद्धिविजयाभिधेन रचिता कथा सुखदा ॥५६२॥
श्रीहीरविजयसूरीश्वरपट्टोदयगिरिद्युमणितुल्ये[2] ।
सम्प्रति विराजमाने सूरिश्रीविजयसेनगुरौ ॥५६३॥
नभरसरसचन्द्राब्दे श्रावणसितपञ्चमीतिथौ[3] सोमे ।
श्रीचित्रसेनपद्मावतीकथा जयतु बुद्धिविजयकृता ॥५६४॥
॥ इति श्रीचित्रसेनपद्मावतीचरित्रं सम्पूर्णम् ॥

1A स्वर्गजसुख । 2 A ०पट्टस्वर्णशैलदेवतरौ । 3Z ०सिते पञ्च० ।